# श्रीसङ्कष्टमोचनस्तोत्रम्

काशीपीठाधीश्वर जगद्गुरुशङ्कराचार्यस्वामि

श्रीमहेश्वरानन्दसरस्वतीविरचितं स्तोत्रम्

सिन्दूरपूररुचिरो बलवीर्यसिन्धुः
बुद्धिप्रभावनिधिरद्भुतवैभवश्रीः ।
दीनार्तिदावदहनो वरदो वरेण्यः
सङ्कष्टमोचनविभुस्तनुतां शुभं नः ॥ १॥

सोत्साहलङ्घितमहार्णवपौरुषश्रीः
लङ्कापुरीप्रदहनप्रथितप्रभावः ।
घोराहवप्रमथितारिचयप्रवीरः
प्राभञ्जनिर्जयति मर्कटसार्वभौमः ॥ २॥

द्रोणाचलानयनवर्णितभव्यभूतिः
श्रीरामलक्ष्मणसहायकचक्रवर्ती ।
काशीस्थदक्षिणविराजितसौधमल्लः
श्रीमारुतिर्विजयते भगवान् महेशः ॥ ३॥

नूनं स्मृतोऽपि ददते भजतां कपीन्द्रः
सम्पूजितो दिशति वाञ्छित-सिद्धिवृद्धिम् ।
संमोदकप्रिय उपैति परं प्रहर्षं
रामायणश्रवणतः पठतां शरण्यः ॥ ४॥

श्रीभारतप्रवरयुद्धरथोद्धतश्रीः
पार्थैककेतनकरालविशालमूर्तिः ।
उच्चैर्घनाघनघटाविकटाट्टहासः

श्रीकृष्णपक्षभरणः शरणं ममाऽस्तु ॥ ५॥

जङ्घालजङ्घ उपमातिविदूरवेगो
मुष्टिप्रहारपरिमूर्च्छितराक्षसेन्द्रः ।
श्रीरामकीर्तितपराक्रमणोद्भवश्रीः
प्राकम्पनिर्विभुरुदञ्चतु भूतये नः ॥ ६॥

सीतार्तिदारणपटुः प्रबलः प्रतापी
श्रीराघवेन्द्रपरिरम्भवरप्रसादः ।
वर्णीश्वरः सविधिशिक्षितकालनेमिः
पञ्चाननोऽपनयतां विपदोऽधिदेशम् ॥ ७॥

उद्यद्भानुसहस्रसन्निभतनुः पीताम्बरालङ्कृतः
प्रोज्ज्वालानलदीप्यमाननयनो निष्पिष्टरक्षोगणः ।
संवर्तोद्यतवारिदोद्धतरवःप्रोच्चैर्गदाविभ्रमः
श्रीमान् मारुतनंदनः प्रतिदिनं ध्येयो विपद्भञ्जनः ॥ ८॥

रक्षःपिशाचभयनाशनमामयाधि
प्रोच्चैर्ज्वरापहरणं हननं रिपूणाम् ।
सम्पत्तिपुत्रकरणं विजयप्रदानं
सङ्कष्टमोचनविभोः स्तवनं नराणाम् ॥ ९॥

दारिद्र्यदुःखदहनं शमनं विवादे
कल्याणसाधनममङ्गलवारणाय ।
दाम्पत्यदीर्घसुखसर्वमनोरथाप्तिं
श्रीमारुतेः स्तवशतावृतिरातनोति ॥ १०॥

स्तोत्रं य एतदनुवासरमाप्तकामः

श्रीमारुतिं समनुचिन्त्य पठेत् सुधीरः ।
तस्मै प्रसादसुमुखो वरवानरेन्द्रः
साक्षात्कृतो भवति शाश्वतिकः सहायः ॥ ११॥

सङ्कष्टमोचनस्तोत्रं शङ्कराचार्यभिक्षुणा ।
महेश्वरेण रचितं मारुतेश्चरणेऽर्पितम् ॥ १२॥

।। इति काशीपीठाधीश्वर जगद्गुरुशङ्कराचार्यस्वामि
श्रीमहेश्वरानन्दसरस्वतीविरचितं श्रीसङ्कष्टमोचनस्तोत्रं सम्पूर्णम् ।।